अथ कथं चतुर्गुणम् ? इत्याह—

**दौःशील्यतद्धेत्वहतं तद्विपक्षसमाश्रितम्॥**

दौःशील्येन तावदनुपहतं भवति यथोक्तेन दौःशील्येन। हेतुनाप्यनुपहतं भवति। लोभादिभिः क्लेशोपक्लेशैः दौःशील्यविपक्षाश्रितं च भवति। स्मृत्युपस्थानसन्निश्रितत्वात् समाश्रितं च भवति। नोपपत्तिविशेषाश्रितम्; निर्वाणपरिणामितत्वात्।

पञ्चभिः कारणैः इत्यपरे। १. मौलैः कर्मपथैर्विशुद्धं भवति, २. सामन्तकैर्विशुद्धम्, ३. वितर्कैरनुपहतम्, ४. स्मृत्यानुपरिगृहीतम्, ५. निर्वाणपरिणामितं चेति।

चतुर्विधं शीलमित्यपरे। १. भयशीलम्—यदाजीविकाश्लोकदण्डदुर्गतिभयात् पाल्यते। २. आशास्तिशीलम्—यद्भवभोगसत्कारतृष्णाक्तम्। ३. बोध्यङ्गानुलोमं शीलम्—यन्मोक्षार्थं सम्यग्दृष्टिकानाम्। ४. परिशुद्धं शीलम्—अनास्रवशीलम्; निर्मलत्वादिति॥

गतं शीलम्॥

**समाहितं तु कुशलं भावना,**

---

*"विशुद्धं तु चतुर्गुणम्"* इति। चत्वारो गुणा अस्येति चतुर्गुणम्॥ १२२॥

*दौःशील्येन यथोक्तेनेति*। "दौःशील्यमशुभं रूपम्" इत्यनेन। *लोभादिभिरिति*। न तैर्दौःशील्यहेतुभिः समुदाचरद्भिरुपहतं *भवति*। *दौःशील्यविपक्षाश्रित*मित्यर्थः।

*मौलैः कर्मपथैर्विशुद्धमिति*। प्राणातिपातादिभिर्मौलैरखण्डितमित्यर्थः। *सामन्तकैर्विशुद्धमिति*। प्राणातिपादिप्रयोगैरदूषितमित्यर्थः। *वितर्कैरिति*। कामवितर्कादिभिः। *स्मृत्यानुपगृहीतमिति*। कायादिस्मृत्युपस्थानैर्दृढीकृतम्। शीलस्मृत्या वानुपरिगृहीतम्।

*आशास्तिशीलमिति*। *आशास्तिः*=प्रार्थना। *यद्भवभोगसत्कारतृष्णाक्तमिति*। भवे भोगे च सत्कारे च या तृष्णा, तया यत् समाक्तमित्यर्थः। *सम्यग्दृष्टिकानामिति*। बुद्धशासनप्रतिपन्नानाम्। अन्यतीर्थिकानां हि न बोध्यङ्गानुकूलम्; असद्दृष्टिकत्वात्।

*"समाहितं तु कुशलम्"* इति। समाहित-ग्रहणमसमाहितनिवृत्त्यर्थम्।

किमिदं समाहितं नाम ? समाधिस्वभावं सहभू यत्। किमर्थमेतत् भावनेत्युच्यते ?

**चित्तवासनात् ॥ १२३ ॥**

तद्धि समाहितं कुशलमत्यर्थं चित्तं वासयति; गुणैस्तन्मयीकरणात् सन्ततेः। पुष्पैस्तिलवासनावत्। दानं तावन्महाभोगतायैः संवर्तत इत्युक्तम् ॥ १२३ ॥

अथ शीलं भावना च ?

**स्वर्गाय शीलं प्राधान्याद् विसंयोगाय भावना।**

दानमपि **स्वर्गाय शीलं प्राधान्यात्।** शीलमपि **विसंयोगाय। भावना तु प्राधान्यात्।**

सूत्र उक्तम्—"चत्वारः पुद्गला ब्राह्मं पुण्यं प्रसवन्ति" (        )

---

कुशल-ग्रहणं समाहितास्वादनासम्प्रयुक्तक्लिष्टध्याननिवृत्त्यर्थम्। तत् समाहितं कुशलसदृशमुत्पद्यते।

*समाधिस्वभाव-सहभू यदिति।* *समाधिस्वभावं* तेन च सह भवति *यदित्यर्थः।*

*तद्धि समाहितमिति* विस्तरः। *तत् समाहितं कुशलमत्यर्थं चित्तं संवासयति।* भावयति। असमाहितमपि वासयति। न त्वेवमत्यर्थमिति दर्शयति। कथम् ? इत्याह—*गुणैस्तन्मयीकरणात् सन्ततेः।* यस्मात् समाधि*गुणैस्*तन्मयीक्रियते चित्त*सन्ततिः।* अत्र दृष्टान्तमाह—*पुष्पैस्तिलवासनावदिति।* यथा *पुष्पैस्तिला* भाव्यन्ते पुष्पगन्धमयीकरणात्, तद्वत्। तदिदमुक्तं भवति—भावना=वासना, तत्स्वभावं पुण्यं भावनामयमिति ॥ १२३ ॥

*अथ शीलं भावना च।* 'कस्मै संवर्तते' इति वाक्यशेषतोऽर्थं पृच्छति। *स्वर्गाय शीलं प्राधान्यादिति।* *शीलं प्राधान्येन स्वर्गाय* भवति। अन्यत्तु न प्राधान्येन स्वर्गाय भवति। किमन्यत् ? दानम्। *दानमपि हि स्वर्गाय* सम्भवति। *शीलमपि विसंयोगाय* सम्भवति; शमथविपश्यनयोः शीलप्रतिष्ठानत्वात्। *भावना प्राधान्येन विसंयोगाय।* साक्षाद् विसंयोगप्रापकत्वात्, प्रहाणमार्गसंगृहीतत्वाद् वा।

पुण्यक्रियावस्तुप्रसङ्गेनेदमुपन्यस्यते—

सूत्र उक्तम्—चत्वारः पुद्गलाः ब्राह्मं पुण्यं प्रसवन्ति। अप्रतिष्ठिते पृथिवीप्रदेशे तथागतस्य शारीरं स्तूपं प्रतिष्ठापयति—अयं प्रथमः पुद्गलः ब्राह्मं पुण्यं प्रसवति। चातुर्दिशे भिक्षुसंघे आरामं निर्यातयति, तत्रैव चारामे विहारं प्रतिष्ठापयति—अयं द्वितीयः पुद्गलो ब्राह्मं पुण्यं प्रसवति। भिन्नं तथागत-

इति। कतमत् तद् ब्राह्मपुण्यम्? यत्तल्लक्षणविपाकस्य कर्मणः परिमाणज्ञापनायोक्तमिति वैभाषिकाः।

पूर्वाचार्यास्तु व्याचक्षते—

**चतुर्णां ब्राह्मपुण्यत्वं कल्पं स्वर्गेषु मोदनात् ॥ १२४ ॥**

यावता पुण्येन कल्पं स्वर्गेषु मोदते, इदं ब्राह्मं पुण्यम्; ब्रह्मपुरोहितानां कल्पायुष्कत्वात्। निकायान्तरे गाथां पठन्ति—

"ब्राह्मं पुण्यं प्रसवति कल्पं स्वर्गेषु मोदते" ( ) इति ॥१२४॥

आमिषदानमुक्तम् ॥

धर्मदानं वक्तव्यम्। तदिदमुच्यते—

**धर्मदानं यथाभूतं सूत्राद्यक्लिष्टदेशना।**

सूत्रादीनां यथाभूतमक्लिष्टदेशना धर्मदानम्। अतो महतीं त आत्मनः

---

श्रावकसंघं प्रतिसन्दधाति—अयं तृतीयः पुद्गलः ब्राह्मं पुण्यं प्रसवति। मैत्रीसहगतेन चित्तेनावैरेणासपत्नेनाव्याबाधेन विपुलेन महद्गतेनाप्रमाणेन सुभावितेनैकां दिशमधिमुच्य स्फरित्वोपसम्पद्य विहरति, तथा द्वितीयाम्, तथा तृतीयाम्, तथा चतुर्थीम्, इत्यूर्ध्वमधस्तिर्यक् सर्वतः सर्वमिमं लोकं स्फरित्वोपसम्पद्य विहरति—अयं चतुर्थः पुद्गलो ब्राह्मं पुण्यं प्रसवति" ( ) इति। *यत्तल्लक्षणविपाकस्य कर्मणः परिमाणज्ञापनायोक्तमिति*। यदुक्तम्—सन्निकृष्टं बोधिसत्त्वं स्थापयित्वा यावत् सर्वसत्त्वानां भोगफलमित्येवमादि।

इदं *ब्राह्मं पुण्यमिति*। ब्रह्मणामिदं ब्राह्मम्। ब्रह्मपुरोहिताश्चात्र ब्रह्मशब्देनोच्यन्ते। कस्मात्? *ब्रह्मपुरोहितानां कल्पायुष्कत्वात्*। ब्रह्मपुरोहितानां हि कल्पमायुरुक्तम्। अनेन च कर्मणा कल्पं स्वर्गेषु मोदते। *ब्राह्मं पुण्यं प्रसवति कल्पं स्वर्गेषु मोदत इति निकायान्तर*पाठवचनात्। तत्साधर्म्यादेतद् ब्राह्मं पुण्यमुच्यते। ननु च कामधातौ नास्ति कुशलस्य कर्मणः कल्पं विपाक इति? सत्यमेकस्य नास्ति; एकाधिष्ठानास्तु बह्व्यश्चेतना भवन्ति। यासां क्रमेण कल्पप्रमाणं स्वार्गिकं फलमभिनिर्वर्तते; च्युतस्य पुनस्तत्रैव जन्मसन्धानात्। बृहत् पुण्यं ब्राह्ममित्यपरे ॥ १२४ ॥

*सूत्रादीनामिति*। *आदि*शब्देन द्वादशानामङ्गानां ग्रहणम्। सूत्र-गेयण-गाथा-उदान-निदानावदान-इतिवृत्तक-जातक-वैपुल्याद्भुतधर्मोपदेशा

पुण्यज्यानिं कुर्वन्ति, ये विपरीतधर्मं देशयन्ति। क्लिष्टचित्ता वा लाभसत्कारयशांसि वाञ्छन्तः।

उक्तं पुण्यक्रियावस्तुभेदेन त्रिविधं कुशलम्॥

पुनः—

पुण्यनिर्वाणनिर्वेधभागीयं कुशलं त्रिधा॥ १२५॥

पुण्यभागीयं यदिष्टविपाकं मोक्षभागीयम्, यस्मिन्नुत्पन्ने नियतं परिनिर्वाणधर्मा भवति। यस्य संसारादीनवनैरात्म्यनिर्वाणगुणद्योतिकां कथां श्रुत्वा रोमहर्षाश्रुपातौ भवतः, तस्यास्ति मोक्षभागीयं कुशलमूलमित्यवसेयम्। प्रावृषीवाङ्कुरप्ररोहात् खलविलेषु बीजास्तित्वम्।

निर्वेधभागीयमूष्मादि चतुर्विधं पश्चाद् व्याख्यास्यामः॥ १२५॥

यदिदं लोक उच्यते लिपिमुद्रागणना काव्यं संख्येति, क एषां स्वभावः ?

योगप्रवर्तितं कर्म ससमुत्थापकं त्रिधा।
लिपिमुद्रे सगणनं काव्यं संख्या यथाक्रमम्॥ १२६॥

योगप्रवर्तितमिति उपायविशेषप्रवर्तितम्। त्रिधा कर्मेति कायवाङ्मनस्कर्म। तत्र लिपिमुद्रे तावद् योगप्रवर्तितं कायकर्म ससमुत्थानम्[1]। गणना काव्यं च

---

इति द्वादशानामङ्गानाम्। अक्लिष्टदेशनेति। अक्लिष्टचित्तसमुत्थापितेत्यर्थः।

पुण्यभागीयमिति। पुण्यस्य भागः प्राप्तिरिति पुण्यभागः। इष्टफलप्राप्तिरित्यर्थः। तस्मै हितं पुण्यभागीयम्। अत एवोक्तम्—यदिष्टविपाकमिति। तत्प्राप्त्यनुकूलमिति। अथवा त्रयो भागाः—पुण्यो भागः, अपुण्यो भागः, आनिञ्ज्यो भागः; तस्मै हितं पुण्यभागीयम्। अथवा—पुण्यं भजत इति पुण्यभाक्, पुण्यभागेव पुण्यभागीयम्। स्वार्थे क-प्रत्ययः। एवं मोक्षभागीयम्। अथ वा संसारभागः, मोक्षभागश्चेति द्वौ भागौ। तत्र यन्मोक्षभागाय हितं तन्मोक्षभागीयम्। मोक्षप्राप्तिर्मोक्षभागः, तस्मै हितम् तत्प्राप्त्यनुकूलमिति मोक्षभागीयम्। तस्य लक्षणं पश्चाद् वक्ष्यते। एवं निर्वेधभागीयमपि योज्यम्। पश्चाद् व्याख्यास्याम इति। "तत ऊष्मगतोत्पत्तिः" (अभि० को० ६.१७) इत्यत्र। कर्माधिकारेणैषां कर्मत्वभावानां लक्षणमुच्यते॥ १२५॥

यदिदं लोक इत्यादि। ससमुत्थानमिति। सचित्तचैतसिककलापम्। येन तत् कायकर्मोत्थाप्यते। तत् कायकर्मससमुत्थानं योगप्रवर्तितम्। लिपिमुद्रा

---

१. समुत्थानम्—का०।

इति। कतमत् तद् ब्राह्मपुण्यम्? यत्तल्लक्षणविपाकस्य कर्मणः परिमाणज्ञापनायोक्तमिति वैभाषिकाः।

पूर्वाचार्यास्तु व्याचक्षते—

**चतुर्णां ब्राह्मपुण्यत्वं कल्पं स्वर्गेषु मोदनात्॥ १२४॥**

यावता पुण्येन कल्पं स्वर्गेषु मोदते, इदं ब्राह्मं पुण्यम्; ब्रह्मपुरोहितानां कल्पायुष्कत्वात्। निकायान्तरे गाथां पठन्ति—

"ब्राह्मं पुण्यं प्रसवति कल्पं स्वर्गेषु मोदते" ( ) इति॥१२४॥

आमिषदानमुक्तम्॥

धर्मदानं वक्तव्यम्। तदिदमुच्यते—

**धर्मदानं यथाभूतं सूत्राद्यक्लिष्टदेशना।**

सूत्रादीनां यथाभूतमक्लिष्टदेशना धर्मदानम्। अतो महर्तीं त आत्मनः

---

श्रावकसंघं प्रतिसन्दधाति—अयं तृतीयः पुद्गलः ब्राह्मं पुण्यं प्रसवति। मैत्रीसहगतेन चित्तेनावैरेणासपत्नेनाव्याबाधेन विपुलेन महद्गतेनाप्रमाणेन सुभावितेनैकां दिशमधिमुच्य स्फरित्वोपसम्पद्य विहरति, तथा द्वितीयाम्, तथा तृतीयाम्, तथा चतुर्थीम्, इत्यूर्ध्वमधस्तिर्यक् सर्वतः सर्वमिमं लोकं स्फरित्वोपसम्पद्य विहरति—अयं चतुर्थः पुद्गलो ब्राह्मं पुण्यं प्रसवति" ( ) इति। *यत्तल्लक्षणविपाकस्य कर्मणः परिमाणज्ञापनायोक्तमिति*। यदुक्तम्—सन्निकृष्टं बोधिसत्त्वं स्थापयित्वा यावत् सर्वसत्त्वानां भोगफलमित्येवमादि।

इदं *ब्राह्मं पुण्यमिति*। ब्रह्मणामिदं ब्राह्मम्। ब्रह्मपुरोहिताश्चात्र ब्रह्मशब्देनोच्यन्ते। कस्मात्? *ब्रह्मपुरोहितानां कल्पायुष्कत्वात्*। ब्रह्मपुरोहितानां हि कल्पमायुरुक्तम्। अनेन च कर्मणा कल्पं स्वर्गेषु मोदते। *ब्राह्मं पुण्यं प्रसवति कल्पं स्वर्गेषु मोदत इति निकायान्तरपाठवचनात्*। तत्साधर्म्यादेतद् ब्राह्मं पुण्यमुच्यते। ननु च कामधातौ नास्ति कुशलस्य कर्मणः कल्पं विपाक इति? सत्यमेकस्य नास्ति; एकाधिष्ठानास्तु बह्व्यश्चेतना भवन्ति। यासां क्रमेण कल्पप्रमाणं स्वार्गिकं फलमभिनिर्वर्तते; च्युतस्य पुनस्तत्रैव जन्मसन्धानात्। बृहत् पुण्यं ब्राह्ममित्यपरे॥ १२४॥

*सूत्रादीनामिति*। *आदिशब्देन* द्वादशानामङ्गानां ग्रहणम्। सूत्र-गेय-व्याकरण-गाथा-उदान-निदानावदान-इतिवृत्तक-जातक-वैपुल्याद्भुतधर्मोपदेशा

पुण्यज्यानिं कुर्वन्ति, ये विपरीतधर्मं देशयन्ति। क्लिष्टचित्ता वा लाभसत्कारयशांसि वाञ्छन्तः।

उक्तं पुण्यक्रियावस्तुभेदेन त्रिविधं कुशलम्॥

पुनः—

**पुण्यनिर्वाणनिर्वेधभागीयं कुशलं त्रिधा॥ १२५॥**

पुण्यभागीयं यदिष्टविपाकं मोक्षभागीयम्, यस्मिन्नुत्पन्ने नियतं परिनिर्वाणधर्मा भवति। यस्य संसारादीनवनैरात्म्यनिर्वाणगुणद्योतिकां कथां श्रुत्वा रोमहर्षाश्रुपातौ भवतः, तस्यास्ति मोक्षभागीयं कुशलमूलमित्यवसेयम्। प्रावृषीवाङ्कुरप्ररोहात् खलविलेषु बीजास्तित्वम्।

निर्वेधभागीयमूष्मादि चतुर्विधं पश्चाद् व्याख्यास्यामः॥ १२५॥

यदिदं लोक उच्यते लिपिमुद्रागणना काव्यं संख्येति, क एषां स्वभावः?

**योगप्रवर्तितं कर्म ससमुत्थापकं त्रिधा।**

**लिपिमुद्रे सगणनं काव्यं संख्या यथाक्रमम्॥ १२६॥**

**योगप्रवर्तित**मिति उपायविशेषप्रवर्तितम्। **त्रिधा कर्मे**ति कायवाङ्मनस्कर्म। तत्र-लिपिमुद्रे तावद् योगप्रवर्तितं कायकर्म ससमुत्थानम्[1]। **गणना काव्यं** च

इति द्वादशानामङ्गानाम्। *अक्लिष्टदेशनेति*। अक्लिष्टचित्तसमुत्थापितेत्यर्थः।

*पुण्यभागीय*मिति। पुण्यस्य भागः प्राप्तिरिति पुण्यभागः। इष्टफलप्राप्तिरित्यर्थः। तस्मै हितं पुण्यभागीयम्। अतएवोक्तम्—*यदिष्टविपाकमि*ति। तत्प्राप्त्यनुकूलमिति। अथवा त्रयो भागाः—पुण्यो भागः, अपुण्यो भागः, अनिञ्जयो भागः; तस्मै हितं पुण्यभागीयम्। अथवा—पुण्यं भजत इति पुण्यभाक्, पुण्यभागेव पुण्यभागीयम्। स्वार्थे क-प्रत्ययः। एवं *मोक्षभागीयम्*। अथ वा संसारभागः, मोक्षभागश्चेति द्वौ भागौ। तत्र यन्मोक्षभागाय हितं *तन्मोक्षभागीयम्*। मोक्षप्राप्तिर्वा मोक्षभागः, तस्मै हितम् तत्प्राप्त्यनुकूलमिति मोक्षभागीयम्। तस्य लक्षणं पश्चाद् वक्ष्यते। एवं *निर्वेधभागीयमपि* योज्यम्। *पश्चाद् व्याख्यास्याम* इति। "तत ऊष्मगतोत्पत्तिः" (अभि० को० ६.१७) इत्यत्र। कर्माधिकारेणैषां कर्मस्वभावानां लक्षणमुच्यते॥ १२५॥

*यदिदं लोक* इत्यादि। *ससमुत्थानमि*ति। सचित्तचैतसिककलापम्। येन तत् कायकर्मोत्थाप्यते। *तत् कायकर्मससमुत्थानं योगप्रवर्तितम्। लिपिर्मुद्रा*

१. समुत्थापनम्—का०।

इति। कतमत् तद् ब्राह्मपुण्यम्? यत्तल्लक्षणविपाकस्य कर्मणः परिमाणज्ञापनायोक्तमिति वैभाषिकाः।

पूर्वाचार्यास्तु व्याचक्षते—

**चतुर्णां ब्राह्मपुण्यत्वं कल्पं स्वर्गेषु मोदनात्॥ १२४॥**

यावता पुण्येन कल्पं स्वर्गेषु मोदते, इदं ब्राह्मं पुण्यम्; ब्रह्मपुरोहितानां कल्पायुष्कत्वात्। निकायान्तरे गाथां पठन्ति—

"ब्राह्मं पुण्यं प्रसवति कल्पं स्वर्गेषु मोदते" ( ) इति॥१२४॥

आमिषदानमुक्तम्॥

धर्मदानं वक्तव्यम्। तदिदमुच्यते—

**धर्मदानं यथाभूतं सूत्राद्यक्लिष्टदेशना।**

सूत्रादीनां **यथाभूतमक्लिष्टदेशना धर्मदानम्**। अतो महतीं त आत्मनः

---

श्रावकसंघं प्रतिसन्दधाति—अयं तृतीयः पुद्गलः ब्राह्मं पुण्यं प्रसवति। मैत्रीसहगतेन चित्तेनावैरेणासपत्नेनाव्याबाधेन विपुलेन महद्गतेनाप्रमाणेन सुभावितेनैकां दिशमधिमुच्य स्फरित्वोपसम्पद्य विहरति, तथा द्वितीयाम्, तथा तृतीयाम्, तथा चतुर्थीम्, इत्यूर्ध्वमधस्तिर्यक् सर्वतः सर्वमिमं लोकं स्फरित्वोपसम्पद्य विहरति—अयं चतुर्थः पुद्गलो ब्राह्मं पुण्यं प्रसवति" ( ) इति। *यत्तल्लक्षणविपाकस्य कर्मणः परिमाणज्ञापनायोक्तमिति*। यदुक्तम्—सन्निकृष्टं बोधिसत्त्वं स्थापयित्वा यावत् सर्वसत्त्वानां भोगफलमित्येवमादि।

*इदं ब्राह्मं पुण्यमिति*। ब्रह्मणामिदं ब्राह्मम्। ब्रह्मपुरोहिताश्चात्र ब्रह्मशब्देनोच्यन्ते। कस्मात्? *ब्रह्मपुरोहितानां कल्पायुष्कत्वात्*। ब्रह्मपुरोहितानां हि कल्पमायुरुक्तम्। अनेन च कर्मणा कल्पं स्वर्गेषु मोदते। *ब्राह्मं पुण्यं प्रसवति कल्पं स्वर्गेषु मोदत इति निकायान्तरपाठवचनात्*। तत्साधर्म्यादेतद् ब्राह्मं पुण्यमुच्यते। ननु च कामधातौ नास्ति कुशलस्य कर्मणः कल्पं विपाक इति? सत्यमेकस्य नास्ति; एकाधिष्ठानास्तु बह्व्यश्चेतना भवन्ति। यासां क्रमेण कल्पप्रमाणं स्वार्गिकं फलमभिनिर्वर्तते; च्युतस्य पुनस्तत्रैव जन्मसन्धानात्। बृहत् पुण्यं ब्राह्ममित्यपरे॥ १२४॥

*सूत्रादीनामिति*। आदिशब्देन द्वादशानामङ्गानां ग्रहणम्। सूत्र-गेय-[व्याकर]ण-गाथा-उदान-निदानावदान-इतिवृत्तक-जातक-वैपुल्याद्भुतधर्मोपदेशा

पुण्यज्यानिं कुर्वन्ति, ये विपरीतधर्मं देशयन्ति। क्लिष्टचित्ता वा लाभसत्कारयशांसि वाञ्छन्तः।

उक्तं पुण्यक्रियावस्तुभेदेन त्रिविधं कुशलम्॥

पुनः—

**पुण्यनिर्वाणनिर्वेधभागीयं कुशलं त्रिधा॥ १२५॥**

पुण्यभागीयं यदिष्टविपाकं मोक्षभागीयम्, यस्मिन्नुत्पन्ने नियतं परिनिर्वाणधर्मा भवति। यस्य संसारादीनवनैरात्म्यनिर्वाणगुणद्योतिकां कथां श्रुत्वा रोमहर्षाश्रुपातौ भवतः, तस्यास्ति मोक्षभागीयं कुशलमूलमित्यवसेयम्। प्रावृषीवाङ्कुरप्ररोहात् खलविलेषु बीजास्तित्वम्।

निर्वेधभागीयमूष्मादि चतुर्विधं पश्चाद् व्याख्यास्यामः॥ १२५॥

यदिदं लोक उच्यते लिपिमुद्रागणना काव्यं संख्येति, क एषां स्वभावः?

**योगप्रवर्तितं कर्म ससमुत्थापकं त्रिधा।**
**लिपिमुद्रे सगणनं काव्यं संख्या यथाक्रमम्॥ १२६॥**

**योगप्रवर्तितम्** इति उपायविशेषप्रवर्तितम्। **त्रिधा कर्मे**ति कायवाङ्मनस्कर्म। तत्र लिपिमुद्रे तावद् योगप्रवर्तितं कायकर्म ससमुत्थानम्[1]। **गणना काव्यं** च

---

इति द्वादशानामङ्गानाम्। *अक्लिष्टदेशनेति*। अक्लिष्टचित्तसमुत्थापितेत्यर्थः।

*पुण्यभागीयमि*ति। पुण्यस्य भागः प्राप्तिरिति पुण्यभागः। इष्टफलप्राप्तिरित्यर्थः। तस्मै हितं पुण्यभागीयम्। अतएवोक्तम्—*यदिष्टविपाकमि*ति। तत्प्राप्त्यनुकूलमिति। अथवा त्रयो भागाः—पुण्यो भागः, अपुण्यो भागः, अनिञ्जचो भागः; तस्मै हितं पुण्यभागीयम्। अथवा—पुण्यं भजत इति पुण्यभाक्, पुण्यभागेव पुण्यभागीयम्। स्वार्थे क-प्रत्ययः। एवं *मोक्षभागीयम्*। अथ वा संसारभागः, मोक्षभागश्चेति द्वौ भागौ। तत्र यन्मोक्षभागाय हितं *तन्मोक्षभागीयम्*। मोक्षप्राप्तिर्वा मोक्षभागः, तस्मै हितम् तत्प्राप्त्यनुकूलमिति मोक्षभागीयम्। तस्य लक्षणं पश्चाद् वक्ष्यते। एवं *निर्वेधभागीयमपि* योज्यम्। *पश्चाद् व्याख्यास्याम* इति। "तत ऊष्मगतोत्पत्तिः" (अभि० को० ६.१७) इत्यत्र। कर्माधिकारेणैषां कर्मस्वभावानां लक्षणमुच्यते॥ १२५॥

*यदिदं लोक* इत्यादि। *ससमुत्थानमि*ति। सचित्तचैतसिककलापम्। येन तत् कायकर्मोत्थाप्यते। *तत् कायकर्मससमुत्थानं योगप्रवर्तितम्*। *लिपिर्मुद्रा*

---

1. समुत्थापनम्—का०।

वाक्कर्म । इत्येतानि पञ्चस्कन्धस्वभावानि । **संख्या** मनस्कर्म, यन्मनसा सङ्कलनं धर्माणाम् ॥ १२६ ॥

धर्माणामिदानीं केचित् पर्याया उच्यन्ते—

**सावद्या निवृता हीनाः क्लिष्टा धर्माः,**

क्लिष्टानां धर्माणां **सावद्या निवृता हीना** इति पर्यायाः ।

**शुभामलाः ।**

**प्रणीताः,**

कुशलानास्रवाणां **प्रणीता** इति पर्यायः ।

हीनप्रणीतेभ्योऽन्ये मध्या इति सिद्धं भवति ।

**संस्कृतशुभाः सेव्याः,**

---

च । कारणे कार्योपचारात् । येन हि कायकर्मणा लिपिर्लिख्यते, मुद्रा वा खन्यते, सा *लिपिर्मुद्रा* च शास्त्रेऽभिप्रेते; न यथा लोके ह्यक्षरचिह्नं पुस्तकादौ लिपिरिष्यते । अक्षरानक्षरचिह्नं च मुद्रेति । *गणना काव्यश्च वाक्कर्म ।* योगप्रवर्तितं ससमुत्थानमिति वर्तते । *पञ्चस्कन्धस्वभावानी*ति । लिपिमुद्रयोः कायकर्म रूपस्कन्धः । गणनाकाव्ययोर्वाक्कर्म रूपस्कन्धः । वेदनादयस्तूभयत्रापि समुत्थानभूताश्चत्वारः स्कन्धा इति । पञ्चस्कन्धस्वभावान्येतानि भवन्ति । *यन्मनसा संकलनं धर्माणा*मिति । एकं द्वे त्रीणीत्येवमादि सा संख्या । यत्तु वाचा न मनसा सा गणनेत्या*भिधार्मिकाः ।* इयं च संख्या सपरिवारग्रहणाच्चतुःस्कन्धस्वभावा ॥ १२६ ॥

लिप्यादिलक्षणनिर्देशानुपङ्गेण सावद्यादीनामपि *धर्माणां* लक्षणनिर्देशोपन्यासः । धर्मस्कन्धक*विभाषाया*मेते पर्याया निर्दिष्टाः । तत्प्रत्यासन्नेयमिति । इमे *पर्याया* उपन्यस्यन्त इत्यपरः सम्बन्धः । सहावद्येन क्लेशलक्षणेन वर्तन्त इति *सावद्याः ।* क्लेशच्छादितत्वा*न्निवृताः ।* क्लेशा अपि हि सम्प्रयोगिणा क्लेशान्तरेण निवृताः । निष्कृष्टत्वादार्यैस्त्यक्तत्वाद् वा *हीनाः । क्लिष्टास्तु* क्लेशयोगतोऽवगन्तव्याः ।

*कल्प*[illegible]*भामलाः ।* कुशलानास्रवाः । ते *प्रणीताः ।* शुद्धिप्रकर्षगतत्वात् । *हीन*-[illegible] *पु*[illegible]*ऽन्ये मध्या इति सिद्ध*मिति । क्लिष्टा एव हीनाः । शुभामला एव च [illegible]*त्रादा*वधारणादतोऽन्ये न हीनाः । न प्रणीता इति मध्याः सिद्धाः ।

[illegible]*ः सेव्या* इति । अविशेषेण सास्रवा अनास्रवा वा सेवित[illegible]

कुशलसंस्कृतानां सेवितव्या इति पर्यायः। शेषा असेवितव्या इति सिद्धं भवति।

कस्मादसंस्कृतं न सेव्यम्? अनभ्यसनीयत्वाद्, अफलत्वाच्च। फलार्थं हि सेवा भवति॥

सोत्तरा अन्ये सर्वधर्माः।

**मोक्षस्त्वनुत्तरः॥ १२७॥**

नहि निर्वाणाद् विशिष्टतरमस्ति। तच्च सर्वेभ्यो विशिष्टम्; कुशलनित्यत्वात्॥ १२७॥

अभिधर्मकोशभाष्ये कर्मनिर्देशो नाम
चतुर्थं कोशस्थानमिति॥

---

पर्युपासितव्याः। सन्तानाध्यारोपणतः। *शेषा असेवितव्या* इति। के शेषाः? असंस्कृताश्च, ये च न कुशलाः। क्लिष्टा निवृताव्याकृता इत्यर्थः।

*अनभ्यसनीयत्वा*दिति। पौनःपुन्येन कर्तुमशक्यत्वादित्यर्थः। अनुत्पाद्यत्वादित्यपरे। *अफलत्वाच्चे*ति। संस्कृतस्य हि हेतुफले। नासंस्कृतस्य ते इति। *सोत्तरा* इति सातिशयाः। अकुशला निवृताव्याकृतानामनिष्टविपाकाभावात्। निवृताव्याकृता अनिवृताव्याकृतैः संस्कृताः सोत्तरा; तेषामक्लिष्टत्वात्। तेऽपि कुशलसास्रवैः सोत्तराः; कुशलसास्रवाणामिष्टफलत्वात्। तेऽप्यनास्रवैः सोत्तराः; निष्क्लेशत्वात्। अनास्रवा अपि संस्कृता असंस्कृतैः सोत्तरा; असंस्कृतानां नित्यत्वात्। संस्कृतावप्याकाशाप्रतिसंख्यानिरोधौ प्रतिसंख्यानिरोधेन *सोत्तरौ*; प्रतिसंख्यानिरोधस्य कुशलनित्यत्वात्।

*मोक्षस्त्वनुत्तरः। न हि निर्वाणाद् विशिष्टतममस्ति।* तथा ह्युक्तम्—"ये केचिद् भिक्षवो धर्माः संस्कृता वा असंस्कृता वा विरागस्तेषामग्र आख्यायते" (　　　) इति। प्रतिसंख्यानिरोधो हि नित्यत्वात् सर्वसंस्कृतेभ्य उत्कृष्टः। कुशलत्वाच्चासंस्कृताभ्यामाकाशाप्रतिसंख्यानिरोधाभ्यामुत्कृष्टतर इति॥१२७॥

*आचार्ययशोमित्रकृतायां स्फुटार्थायामभिधर्मकोशव्याख्यायां*
*चतुर्थकोशस्थानं समाप्तम्॥*

ये धर्मा हेतुप्रभवा हेतुं तेषां तथागतो ह्यवदत् ।
तेषां च यो निरोध एवंवादी महाश्रमणः ॥

# अभिधर्मकोशस्य मूलपाठः

## तृतीयं कोशस्थानम्

### ( लोकनिर्देशः )

नरकप्रेततिर्यञ्चो मानुषाः षड् दिवौकसः ।
कामधातुः स नरकद्वीपभेदेन विंशतिः ॥ १ ॥
ऊर्ध्वं सप्तदशस्थानो रूपधातुः पृथक् पृथक् ।
ध्यानं त्रिभूमिकं तत्र चतुर्थं त्वष्टभूमिकम् ॥ २ ॥
आरूप्यधातुरस्थान उपपत्त्या चतुर्विधः ।
निकायं जीवितं चात्र निःश्रिता चित्तसन्ततिः ॥ ३ ॥
नरकादिस्वनामोक्ता गतयः पञ्च तेषु ताः ।
अक्लिष्टाव्याकृता एव सत्त्वाख्या नान्तराभवः ॥ ४ ॥
नानात्वकायसंज्ञाश्च नानाकायैकसंज्ञिनः ।
विपर्ययाच्चैककायसंज्ञाश्चारूपिणस्त्रयः ॥ ५ ॥
विज्ञानस्थितयः सप्त शेषं तत्परिभेदवत् ।
भवाग्रासंज्ञिसत्त्वाश्च सत्त्वावासा नव स्मृताः ॥ ६ ॥
अनिच्छावसनान्नान्ये चतस्रः स्थितयः पुनः ।
चत्वारः सास्रवाः स्कन्धाः स्वभूमावेव केवलम् ॥ ७ ॥
विज्ञानं न स्थितिप्रोक्तं चतुष्कोटि तु संग्रहे ।
चतस्रो योनयस्तत्र सत्त्वानामण्डजादयः ॥ ८ ॥
चतुर्धा नरतिर्यञ्चो नारका उपपादुकाः ।
अन्तराभवदेवाश्च प्रेता अपि जरायुजाः ॥ ९ ॥
मृत्यूपपत्तिभवयोरन्तरा भवतीह यः ।
गम्यदेशानुपेतत्वान्नोपपन्नोऽन्तराभवः ॥ १० ॥
व्रीहिसन्तानसाधर्म्यादविच्छिन्नभवोद्भवः ।
प्रतिविम्वमसिद्धत्वादसाम्याच्चानिदर्शनम् ॥ ११ ॥
सहैकत्र द्वयाभावाद् असन्तानाद् द्वयोदयात् ।
कण्ठोक्तेश्चास्ति गन्धर्वात् पञ्चोक्तेर्गतिसूत्रतः ॥ १२ ॥
एकाक्षेपादसावेष्यत्पूर्वकालभवाकृतिः ।
स पुनर्मरणात् पूर्वः, उपपत्तिक्षणात् परः ॥ १३ ॥
सजातिशुद्धदिव्याक्षिदृश्यः कर्मर्द्धिवेगवान् ।
सकलाक्षोऽप्रतिघवाननिवर्त्यः स गन्धभुक् ॥ १४ ॥
विपर्यस्तमतिर्याति गतिदेशं रिरंसया ।
गन्धस्थानाभिकामोऽन्य ऊर्ध्वपादस्तु नारकः ॥ १५ ॥

सम्प्रजानन् विशत्येकस्तिष्ठत्यप्यपरोऽपरः ।
निष्क्रामत्यपि सर्वाणि मूढोऽन्यो नित्यमण्डजः ॥ १६ ॥
गर्भावक्रान्तयस्तिस्रश्चक्रवर्तिस्वयम्भुवाम् ।
कर्मज्ञानोभयेषां वा विशदत्वाद् यथाक्रमम् ॥ १७ ॥
नात्मास्ति स्कन्धमात्रं तु क्लेशकर्माभिसंस्कृतम् ।
अन्तराभवसन्तत्या कुक्षिमेति प्रदीपवत् ॥ १८ ॥
यथाक्षेपं क्रमाद् वृद्धः सन्तानः क्लेशकर्मभिः ।
परलोकं पुनर्यातीत्यनादिभवचक्रकम् ॥ १९ ॥
स प्रतीत्यसमुत्पादो द्वादशाङ्गस्त्रिकाण्डकः ।
पूर्वापरान्तयोर्द्वे द्वे मध्येऽष्टौ परिपूरिणः ॥ २० ॥
पूर्वक्लेशदशाऽविद्या संस्काराः पूर्वकर्मणः ।
सन्धिस्कन्धास्तु विज्ञानं नामरूपमतः परम् ॥ २१ ॥
प्राक् षडायतनोत्पादात् तत्पूर्वं त्रिकसंगमात् ।
स्पर्शः प्राक् सुखदुःखादिकारणज्ञानशक्तितः ॥ २२ ॥
वित्तिः प्राङ्मैथुनात् तृष्णा भोगमैथुनरागिणः ।
उपादानं तु भोगानां प्राप्तये परिधावतः ॥ २३ ॥
स भविष्यद्भवफलं कुरुते कर्म तद्भवः ।
प्रतिसन्धिः पुनर्जातिर्जरामरणमाविदः ॥ २४ ॥
आवस्थिकः किलेष्टोऽयं प्राधान्यात् त्वङ्गकीर्तनम् ।
पूर्वापरान्तमध्येषु सम्मोहविनिवृत्तये ॥ २५ ॥
क्लेशास्त्रीणि द्वयं कर्म सप्त वस्तु फलं तथा ।
फलहेत्वभिसंक्षेपो द्वयोर्मध्यानुमानतः ॥ २६ ॥
क्लेशात् क्लेशः क्रिया चैव ततो वस्तु ततः पुनः ।
वस्तु क्लेशाश्च जायन्ते भवाङ्गानामयं नयः ॥ २७ ॥
हेतुरत्र समुत्पादः समुत्पन्नं फलं मतम् ।
विद्याविपक्षो धर्मोऽन्योऽविद्याऽमित्रानृतादिवत् ॥ २८ ॥
संयोजनादिवचनात् कुप्रज्ञा चेन्न दर्शनात् ।
दृष्टेस्तत्सम्प्रयुक्तत्वात् प्रज्ञोपक्लेशदेशनात् ॥ २९ ॥
नाम त्वरूपिणः स्कन्धाः स्पर्शाः षट् सन्निपातजाः ।
पञ्च प्रतिघसंस्पर्शः षष्ठोऽधिवचनाह्वयः ॥ ३० ॥
विद्याऽविद्येतरस्पर्शा अमलक्लिष्टशेषिताः ।
व्यापादानुनयस्पर्शौ सुखवेद्यादयस्त्रयः ॥ ३१ ॥
तज्जाः षड् वेदनाः पञ्च कायिकी चैतसी परा ।
पुनश्चाष्टादशविधा सा मनोपविचारतः ॥ ३२ ॥

कामे स्वालम्बनाः सर्वे रूपी द्वादशगोचरः ।
त्रयाणामुत्तरो ध्यानद्वये द्वादश कामगाः ॥ ३३ ॥

स्वोऽष्टालम्बनमारूप्या द्वयोर्ध्यानद्वये तु षट् ।
कामः षण्णां चतुर्णां स्व एकस्यालम्बनं परः ॥ ३४ ॥

चत्वारोऽरूपिसामन्ते रूपगा एक ऊर्ध्वगः ।
एको मौले स्वविषयः सर्वेऽष्टादश सास्रवाः ॥ ३५ ॥

उक्तं च वक्ष्यते चान्यदत्र तु क्लेश इष्यते ।
बीजवन्नागवन्मूलवृक्षवत् तुषवत् तथा ॥ ३६ ॥

तुषितण्डुलवत् कर्म तथैवौषधिपुष्पवत् ।
सिद्धान्नपानवद् वस्तु तस्मिन् भवचतुष्टये ॥ ३७ ॥

उपपत्तिभवः क्लिष्टः सर्वक्लेशैः स्वभूमिकैः ।
त्रिधान्ये त्रय आरूप्ये आहारस्थितिकं जगत् ॥ ३८ ॥

कवडीकार आहारः कामे त्र्यायतनात्मकः ।
न रूपायतनं तेन स्वाक्षमुक्ताननुग्रहात् ॥ ३९ ॥

स्पर्शसञ्चेतनाविज्ञा आहाराः सास्रवास्त्रिषु ।
मनोमयः सम्भवैषी गन्धर्वश्चान्तराभवः ॥ ४० ॥

निर्वृत्तिश्चेह पुष्ट्यर्थमाश्रयाश्रितयोर्द्वयम् ।
द्वयमन्यभवाक्षेपनिर्वृत्त्यर्थं यथाक्रमम् ॥ ४१ ॥

छेदसन्धानवैराग्यहानिच्युत्युपपत्तयः ।
मनोविज्ञान एवेष्टा उपेक्षायां च्युतोद्भवौ ॥ ४२ ॥

नैकाग्राचित्तयोरेतौ निर्वात्यव्याकृतद्वये ।
क्रमच्युतौ पादनाभिहृदयेषु मनश्च्युतिः ॥ ४३ ॥

अधोनृसुरगाजानां मर्मच्छेदस्त्ववादिभिः ।
सम्यङ् मिथ्यात्वनियता आर्यानन्तर्यकारिणः ॥ ४४ ॥

तत्र भाजनलोकस्य सन्निवेशमुशन्त्यधः ।
लक्षषोडशकोद्वेधम् असंख्यं वायुमण्डलम् ॥ ४५ ॥

अपामेकादशोद्वेधं सहस्राणि च विंशतिः ।
अष्टलक्षोच्छ्रयं पश्चाच्छेषं भवति काञ्चनम् ॥ ४६ ॥

तिर्यक् त्रीणि सहस्राणि सार्धं शतचतुष्टयम् ।
लक्षद्वादशकं चैव जलकाञ्चनमण्डलम् ॥ ४७ ॥

समन्ततस्तु त्रिगुणं तत्र मेरुर्युगन्धरः ।
ईषाधारः खदिरकः सुदर्शनगिरिस्तथा ॥ ४८ ॥

अश्वकर्णो विनतको निमिन्धरगिरिस्ततः ।
द्वीपा बहिश्चक्रवाडः सप्त हैमाः स आयसः ॥ ४९ ॥

चतूरत्नमयो मेरुर्जलेऽशीतिसहस्रके ।
मग्ना ऊर्ध्वं जलान्मेरुर्भूयोऽशीतिसहस्रकः ॥ ५० ॥

अर्धार्धहानिरष्टासु समोच्छ्रायघनाश्च ते ।
सीता: सप्तरान्तराण्येषामाद्याशीतिसहस्रिका ॥ ५१ ॥

आभ्यन्तर: समुद्रोऽसौ त्रिगुण: स तु पार्श्वत: ।
अर्धार्धेनापरा: शीता: शेषं बाह्यो महोदधि: ॥ ५२ ॥

लक्षत्रयं सहस्राणि विंशतिर्द्वे च तत्र तु ।
जम्बूद्वीपो द्विसाहस्रस्त्रिपार्श्व: शकटाकृति: ॥ ५३ ॥

सार्धत्रियोजनं त्वेकं प्राग्विदेहोऽर्धचन्द्रवत् ।
पार्श्वत्रयं तथास्यैकं सार्धं त्रिशतयोजनम् ॥ ५४ ॥

गोदानीय: सहस्राणि सप्त सार्धानि मण्डल: ।
सार्धे द्वे मध्यमस्याष्टौ चतुरस्र: कुरु: सम: ॥ ५५ ॥

देहा विदेहा: कुरव: कौरवाश्चामरावरा: ।
अष्टौ तदन्तरद्वीपा: शाठा उत्तरमन्त्रिण: ॥ ५६ ॥

इहोत्तरेण कीटाद्रिनवकाद्धिमवांस्तत: ।
पञ्चाशद् विस्तृतायामं सरोऽर्वाग् गन्धमादनात् ॥ ५७ ॥

अध: सहस्रैर्विंशत्या तन्मात्रोऽवीचिरस्य हि ।
तदूर्ध्वं सप्त नरका: सर्वेऽष्टौ षोडशोत्सदा: ॥ ५८ ॥

कुकूलं कुणपं चाथ क्षुरमार्गादिकं नदी ।
तेषां चतुर्दिशं शीता अन्येऽष्टावर्बुदादय: ॥ ५९ ॥

अर्धेन मेरोश्चन्द्रार्कौ पञ्चाशत्सैकयोजनौ ।
अर्धरात्रोऽस्तगमनं मध्याह्न उदय: सकृत् ॥ ६० ॥

प्रावृण्मासे द्वितीयेऽन्त्यनवम्यां वर्धते निशा ।
हेमन्तानां चतुर्थे तु हीयतेऽहर्विपर्ययात् ॥ ६१ ॥

लवशो रात्र्यहर्वृद्धी दक्षिणोत्तरगे रवौ ।
स्वच्छाययाऽर्कसामीप्याद् विकलेन्दुसमीक्षणम् ॥ ६२ ॥

परिषण्डाश्चतस्रोऽस्य दशसाहस्रिकान्तरा: ।
षोडशाष्टौ सहस्राणि चत्वारि द्वे च निर्गता: ॥ ६३ ॥

करोटपाणयस्तासु मालाधरा: सदामदा: ।
महाराजिकदेवाश्च पर्वतेष्वपि सप्तसु ॥ ६४ ॥

मेरुमूर्ध्नि त्रयस्त्रिंशा: स चाशीति सहस्रदिक् ।
विदिक्षु कूटाश्चत्वार: उषिता वज्रपाणिभि: ॥ ६५ ॥

मध्ये सार्धद्विसाहस्रपार्श्वम् अध्यर्धयोजनम् ।
पुरं सुदर्शनं नाम हैमं चित्रतलं मृदु ॥ ६६ ॥

सार्धद्विशतपार्श्वोऽत्र वैजयन्तो बहि: पुन: ।
तच्चैत्ररथपारुष्यमिश्रनन्दनभूषितम् ॥ ६७ ॥

विंशत्यन्तरितान्येषां सुभूमीनि चतुर्दिशम् ।
पूर्वोत्तरे पारिजात: सुधर्मा दक्षिणावरे ॥ ६८ ॥

तत ऊर्ध्वं विमानेषु देवाः कामभुजस्तु षट् ।
द्वन्द्वालिङ्गनपाण्याप्तिहसितेक्षणमैथुनाः ॥ ६९ ॥

पञ्चवर्षोपमो यावद् दशवर्षोपमः शिशुः ।
सम्भवत्येषु सम्पूर्णाः सवस्त्राश्चैव रूपिणः ॥ ७० ॥

कामोपपत्तयस्तिस्रः कामदेवाः समानुषाः ।
सुखोपपत्तयस्तिस्रो नवत्रिध्यानभूमयः ॥ ७१ ॥

स्थानात् स्थानादधो यावत् तावदूर्ध्वं ततस्ततः ।
नोर्ध्वं दर्शनमस्त्येषामन्यत्रर्द्धिपराश्रयात् ॥ ७२ ॥

चतुर्द्वीपकचन्द्रार्कमेरुकामदिवौकसाम् ।
ब्रह्मलोकसहस्रं च साहस्रश्चूडिको मतः ॥ ७३ ॥

तत् सहस्रं द्विसाहस्रो लोकधातुस्तु मध्यमः ।
तत् सहस्रं त्रिसाहस्रः समसंवर्तसम्भवः ॥ ७४ ॥

जाम्बूद्वीपाः प्रमाणेन चतुःसार्धत्रिहस्तकाः ।
द्विगुणोत्तरवृद्धया तु पूर्वगोदोत्तराह्वयाः ॥ ७५ ॥

पादवृद्धया तनुर्यावत् सार्धक्रोशो दिवौकसाम् ।
कामिनां रूपिणां त्वादौ योजनार्धं ततः परम् ॥ ७६ ॥

अर्वाग्वृद्धिरूर्ध्वं तु परीत्ताभेभ्य आश्रयः ।
द्विगुणद्विगुणो हित्वाऽनभ्रकेभ्यस्त्रियोजनम् ॥ ७७ ॥

सहस्रमायुः कुरुषु द्वयोरर्धार्धवर्जितम् ।
इहानियतमन्ते तु दशाब्दा आदितोऽमितम् ॥ ७८ ॥

नृणां वर्षाणि पञ्चाशदहोरात्रो दिवौकसाम् ।
कामेऽधराणां तेनायुः पञ्चवर्षशतानि तु ॥ ७९ ॥

द्विगुणोत्तरमूर्ध्वानामुभयं रूपिणां पुनः ।
नास्त्यहोरात्रमायुस्तु कल्पैः स्वाश्रयसम्मितैः ॥ ८० ॥

आरूप्ये विंशतिः कल्पसहस्राण्यधिकाधिकम् ।
महाकल्पः परीत्ताभात् प्रभृत्यर्धमधस्ततः ॥ ८१ ॥

कामदेवायुषा तुल्या अहोरात्रा यथाक्रमम् ।
सञ्जीवादिषु षट्स्वायुस्तैस्तेषां कामदेववत् ॥ ८२ ॥

अर्धं प्रतापनेऽवीचावन्तः कल्पं परं पुनः ।
कल्पं तिरश्चां प्रेतानां मासाह्ना शतपञ्चकम् ॥ ८३ ॥

वाहाद् वर्षशतेनैकतिलोद्धारक्षयायुषः ।
अर्बुदा विंशतिगुणप्रतिवृद्धायुषः परे ॥ ८४ ॥

कुरुवाह्योऽन्तरा मृत्युः परमाण्वक्षरक्षणाः ।
रूपनामाध्वपर्यन्ताः परमाणुरणुस्तथा ॥ ८५ ॥

लोहाप्शशाविगोच्छिद्ररजोलिक्षास्तदुद्भवाः ।
यवस्तथाङ्गुलीपर्व ज्ञेयं सप्तगुणोत्तरम् ॥ ८६ ॥

चतुर्विंशतिरङ्गुल्यो हस्तो हस्तचतुष्टयम् ।
धनुः पञ्चशतान्येषां क्रोशोऽरण्यं च तन्मतम् ॥ ८७ ॥
तेऽष्टौ योजनमित्याहुर्विंशं क्षणशतं पुनः ।
तत्क्षणस्ते पुनः षष्टिर्लवस्त्रिंशद् गुणोत्तराः ॥ ८८ ॥
त्रयो मुहूर्ताहोरात्रमासा द्वादशमासकः ।
संवत्सरः सोनरात्रः कल्पो बहुविधः स्मृतः ॥ ८९ ॥
संवर्तकल्पो नरकासम्भवाद् भाजनक्षयः ।
विवर्तकल्पः प्राग् वायोर्यावन्नारकसम्भवः ॥ ९० ॥
अन्तःकल्पोऽमिताद् यावद् दशवर्शायुषस्ततः ।
उत्कर्षा अपकर्षाश्च कल्पा अष्टादशापरे ॥ ९१ ॥
उत्कर्ष एकस्तेऽशीतिसहस्राद् यावदायुषः ।
इति लोको विवृत्तोऽयं कल्पांस्तिष्ठति विंशतिम् ॥ ९२ ॥
विवर्ततेऽथ संवर्त आस्ते संवर्तते समम् ।
तेऽह्यशीतिर्महाकल्पस्तदसंख्यत्रयोद्भवम् ॥ ९३ ॥
बुद्धत्वम्, अपकर्षे तु शताद् यावत् तदुद्भवः ।
द्वयोः प्रत्येकबुद्धानां खड्गः कल्पशतान्वयः ॥ ९४ ॥
चक्रवर्तिसमुत्पत्तिर्नाधोऽशीतिसहस्रकात् ।
सुवर्णरूप्यताम्रायश्चक्रिणस्तेऽधरक्रमात् ॥ ९५ ॥
एकद्वित्रिचतुर्द्वीपा न च द्वौ सह बुद्धवत् ।
प्रत्युद्यान-स्वयंयान-कलहास्त्रजितोऽवधाः ॥ ९६ ॥
देशस्थोत्तमपूर्णत्वैर्लक्षणातिशयो मुनेः ।
प्रागासन् रूपिवत् सत्त्वा रसरागात् ततः शनैः ॥ ९७ ॥
आलस्यात् सन्निधिं कृत्वा साग्रहैः क्षेत्रपो भृतः ।
ततः कर्मपथाधिक्यादपह्रासे दशायुषः ॥ ९८ ॥
कल्पस्य शस्त्ररोगाभ्यां दुर्भिक्षेण च निर्गमः ।
दिवसान् सप्त मासांश्च वर्षाणि च यथाक्रमम् ॥ ९९ ॥
संवर्तन्यः पुनस्तिस्रो भवन्त्यग्न्यम्बुवायुभिः ।
ध्यानत्रयं द्वितीयादि शीर्षं तासां यथाक्रमम् ॥१००॥
तदपक्षालसाधर्म्यान्न चतुर्थेऽस्त्यनिञ्जनात् ।
न नित्यं सह सत्त्वेन तद्विमानोदयव्ययात् ॥१०१॥
सप्ताग्निनाद्भिरेकैवं गतेऽद्भिः सप्तके पुनः ।
तेजसा सप्तकः पश्चाद् वायुसंवर्तनी ततः ॥१०२॥

# चतुर्थं कोशस्थानम्

## ( कर्मनिर्देशः )

कर्मजं लोकवैचित्र्यं चेतना तत्कृतं च तत् ।
चेतना मानसं कर्म तज्जे वाक्कायकर्मणी ॥ १ ॥
ते तु विज्ञप्त्यविज्ञप्ती कायविज्ञप्तिरिष्यते ।
संस्थानं न गतिर्यस्मात् संस्कृतं क्षणिकं व्ययात् ॥ २ ॥
न कस्यचिदहेतोः स्याद्धेतुः स्याच्च विनाशकः ।
द्विग्राह्यं स्यान्न चाऽणौ तद् वाग्विज्ञप्तिस्तु वाग्ध्वनिः ॥ ३ ॥
त्रिविधामलरूपोक्तिवृद्ध्यकुर्वत्पथादिभिः ।
क्षणादूर्ध्वमविज्ञप्तिः कामाप्तातीतभूतजा ॥ ४ ॥
स्वानि भूतान्युपादाय कायवाक्कर्म सास्रवम् ।
अनास्रवं यत्र जातोऽविज्ञप्तिरनुपात्तिका ॥ ५ ॥
नैष्यन्दिकी च सत्त्वाख्या निष्यन्दोपात्तभूतजा ।
समाधिजौपचयिकानुपात्ताभिन्नभूतजा ॥ ६ ॥
नाव्याकृतास्त्यविज्ञप्तिस्त्रिधाऽन्यदशुभं पुनः ।
कामे रूपेऽप्यविज्ञप्तिर्विज्ञप्तिः सविचारयोः ॥ ७ ॥
कामेऽपि निवृता नास्ति समुत्थानमसद् यतः ।
परमार्थशुभो मोक्षः स्वतो मूलह्र्यपत्रपा ॥ ८ ॥
सम्प्रयोगेण तद्युक्ताः समुत्थानात् क्रियादयः ।
विपर्ययेणाकुशलं परमाव्याकृते ध्रुवे ॥ ९ ॥
समुत्थानं द्विधा हेतुतत्क्षणोत्थानसंज्ञितम् ।
प्रवर्तकं तयोराद्यं द्वितीयमनुवर्तकम् ॥ १० ॥
प्रवर्तकं दृष्टिहेयं विज्ञानमुभयं पुनः ।
मानसं भावनाहेयं पञ्चकं त्वनुवर्तकम् ॥ ११ ॥
प्रवर्तके शुभादौ हि स्यात् त्रिधाप्यनुवर्तकम् ।
तुल्यं मुनेः शुभं यावत् नोभयं तु विपाकजम् ॥ १२ ॥
अविज्ञप्तिस्त्रिधा ज्ञेया संवरासंवरेतरा ।
संवरः प्रातिमोक्षाख्यो ध्यानजोऽनास्रवस्तथा ॥ १३ ॥

पञ्चाष्टदशसर्वेभ्यो वर्ज्येभ्यो विरतिग्रहात् ।
उपासकोपवासस्थश्रमणोद्देशभिक्षुता ॥ १५ ॥
शीलं सुचरितं कर्म-संवरश्चोच्यते पुनः ।
आद्ये विज्ञप्त्यविज्ञप्ती प्रातिमोक्षः क्रियापथः ॥ १६ ॥
प्रातिमोक्षान्विता चाष्टौ ध्यानजेन तदन्वितः ।
अनास्रवेणार्यसत्त्वा अन्त्यौ चित्तानुवर्तिनौ ॥ १७ ॥
अनागम्ये प्रहाणाख्यौ तावानन्तर्यमार्गजौ ।
सम्प्रजानस्मृती द्वे तु मनइन्द्रियसंवरौ ॥ १८ ॥
प्रातिमोक्षस्थितो नित्यमात्यागाद् वर्तमानया ।
अविज्ञप्त्यान्वितः पूर्वात् क्षणादूर्ध्वमतीतया ॥ १९ ॥
तथैवासंवरस्थोऽपि ध्यानसंवरवान् सदा ।
अतीताजातयाऽऽर्यस्तु प्रथमे नाभ्यतीतया ॥ २० ॥
समाहितार्यमार्गस्थौ तौ युक्तौ वर्तमानया ।
मध्यस्थस्यास्ति चेदादौ मध्ययोर्ध्वं द्विकालया ॥ २१ ॥
असंवरस्थः शुभयाऽशुभया संवरे स्थितः ।
अविज्ञप्त्यान्वितो यावत् प्रसादक्लेशवेगवान् ॥ २२ ॥
विज्ञप्त्या तु युताः सर्वे कुर्वन्तो मध्ययान्विताः ।
अतीतया क्षणादूर्ध्वमात्यागान्नास्त्यजातया ॥ २३ ॥
निवृतानिवृताभ्यां च नातीताभ्यां समन्वितः ।
असंवरो दुश्चरितं दौःशील्यं कर्म तत्पथः ॥ २४ ॥
विज्ञप्त्यैवान्वितः कुर्वन् मध्यस्थो मृदुचेतनः ।
त्यक्तानुत्पन्नविज्ञप्तिरविज्ञप्त्यार्यपुद्गलः ॥ २५ ॥
ध्यानजो ध्यानभूम्यैव लभ्यतेऽनास्रवस्तया ।
आर्यया प्रातिमोक्षाख्यः परविज्ञपनादिभिः ॥ २६ ॥
यावज्जीवं समादानमहोरात्रं च संवृतेः ।
नासंवरोऽस्त्यहोरात्रं न किलैवं प्रगृह्यते ॥ २७ ॥
काल्यं ग्राह्योऽन्यतो नीचैः स्थितेनोक्तानुवादिना ।
उपवासः समग्राङ्गो निर्भूषेणानिशाक्षयात् ॥ २८ ॥
शीलाङ्गान्यप्रमादाङ्गं व्रताङ्गानि यथाक्रमम् ।
चत्वार्येकं तथा त्रीणि स्मृतिनाशो मदश्च तैः ॥ २९ ॥
अन्यस्याप्युपवासोऽस्ति शरणं त्वगतस्य न ।
उपासकत्वोपगमात् संवृदुक्तिस्तु भिक्षुवत् ॥ ३० ॥

सर्वे चेत् संवृता एकदेशकार्यादयः कथम् ।
तत्पालनात् किल प्रोक्ता मृद्वादित्वं यथा मनः ॥ ३१ ॥
बुद्धसंघकरान् धर्मान् अशैक्षानुभयांश्च सः ।
निर्वाणं चैति शरणं यो याति शरणत्रयम् ॥ ३२ ॥

मिथ्याचारातिगर्ह्यत्वात् सौकर्यादक्रियाप्तितः ।
यथाभ्युपगमं लाभः संवरस्य न सन्ततेः ॥ ३३ ॥
मृषावादप्रसङ्गाच्च सर्वशिक्षाव्यतिक्रमे ।
प्रतिक्षेपणसावद्यात् मद्यादेवान्यगुप्तये ॥ ३४ ॥

सर्वोभयेभ्यः कामाप्तो वर्धमानेभ्य आप्यते ।
मौलेभ्यः सर्वकालेभ्यो ध्यानानास्रवसंवरौ ॥ ३५ ॥
संवरः सर्वसत्त्वेभ्यो विभाषा त्वङ्गकारणैः ।
असंवरस्तु सर्वेभ्यः सर्वाङ्गिभ्यो न कारणैः ॥ ३६ ॥
असंवरस्य क्रियया लाभोऽभ्युपगमेन वा ।
शेषाविज्ञप्तिलाभस्तु क्षेत्रादानादरेहणात् ॥ ३७ ॥
प्रातिमोक्षदमत्यागः शिक्षानिक्षेपणाच्च्युतेः ।
उभयव्यञ्जनोत्पत्तेर्मूलोच्छेदान्निशात्ययात् ॥ ३८ ॥
पतनीयेन चेत्येके सद्धर्मान्तर्धितोऽपरे ।
धनर्णवत्तु काश्मीरैरापन्नस्येष्यते द्वयम् ॥ ३९ ॥
भूमिसञ्चारहानिभ्यां ध्यानाप्तं त्यज्यते शुभम् ।
तथारूप्याप्तमार्यं तु फलाप्त्युत्तप्तिहानिभिः ॥ ४० ॥
असंवरः संवराप्तिमृत्युद्विव्यञ्जनोदयैः ।
वेगादानक्रियार्थायुर्मूलच्छेदैस्तु मध्यमा ॥ ४१ ॥
कामाप्तं कुशलारूपं मूलच्छेदोर्ध्वजन्मतः ।
प्रतिपक्षोदयात् क्लिष्टमरूपं तु विहीयते ॥ ४२ ॥
नृणामसंवरो हित्वा षण्ढपण्डद्विधाकृतीन् ।
कुरूंश्च संवरोऽप्येवं देवानां च नृणां त्रयः ॥ ४३ ॥
कामरूपजदेवानां ध्यानजोऽनास्रवः पुनः ।
ध्यानान्तरासंज्ञिसत्त्ववर्ज्यानामप्यरूपिणाम् ॥ ४४ ॥
क्षेमाक्षेमेतरत् कर्म कुशलाकुशलेतरत् ।
पुण्यापुण्यमनिञ्ज्यं च सुखवेद्यादि च त्रयम् ॥ ४५ ॥
कामधातौ शुभं कर्म पुण्यमानिञ्ज्यमूर्ध्वजम् ।

सुखवेद्यं शुभं ध्यानादातृतीयादतः परम् ।
अदुःखासुखवेद्यं तु दुःखवेद्यमिहाशुभम् ॥ ४७ ॥
अधोऽपि मध्यमस्त्येके ध्यानान्तरविपाकतः ।
अपूर्वाचरमः पाकस्त्रयाणां चेष्यते यतः ॥ ४८ ॥

स्वभावसम्प्रयोगाभ्यामालम्बनविपाकतः ।
सम्मुखीभावतश्चेति पञ्चधा वेदनीयता ॥ ४९ ॥
नियतानियतं तच्च नियतं त्रिविधं पुनः ।
दृष्टधर्मादिवेद्यत्वात् पञ्चधा कर्म केचन ॥ ५० ॥

चतुष्कोटिकमित्यन्ये निकायाक्षेपणं त्रिभिः ।
सर्वत्र चतुराक्षेपः शुभस्य नरके त्रिधा ॥ ५१ ॥
यद्विरक्तः स्थिरो बालस्तत्र नोत्पद्यवेद्यकृत् ।
नान्यवेद्यकृदप्यार्यः कामेऽग्रे वास्थिरोऽपि न ॥ ५२ ॥

द्वाविंशतिविधं कामेष्वाक्षिपत्यन्तराभवः ।
दृष्टधर्मफलं तच्च निकायो ह्येक एव सः ॥ ५३ ॥
तीव्रक्लेशप्रसादेन सातत्येन च यत्कृतम् ।
गुणक्षेत्रे च नियतं तत् पित्रोर्घातकं च यत् ॥ ५४ ॥

दृष्टधर्मफलं कर्म क्षेत्राशयविशेषतः ।
तद्भूम्यत्यन्तवैराग्याद् विपाके नियतं हि यत् ॥ ५५ ॥
ये निरोधारणामैत्रीदर्शनार्हत्फलोत्थिताः ।
तेषु कारापकाराणां फलं सद्योऽनुभूयते ॥ ५६ ॥

कुशलस्यावितर्कस्य कर्मणो वेदना मता ।
विपाकश्चैतसिक्येव कायिक्येवाशुभस्य तु ॥ ५७ ॥
चित्तक्षेपो मनश्चित्ते स च कर्मविपाकजः ।
भयोपघातवैषम्यशोकैश्चाकुरुकामिनाम् ॥ ५८ ॥
वङ्कदोषकषायोक्तिः शाठ्यद्वेषजरागजे ।
कृष्णशुक्लादिभेदेन पुनः कर्म चतुर्विधम् ॥ ५९ ॥
अशुभं रूपकामाप्तं शुभं चैव यथाक्रमम् ।
कृष्णशुक्लोभयं कर्म तत्क्षयाय निरास्रवम् ॥ ६० ॥
धर्मक्षान्तिषु वैराग्ये चानन्तर्यपथाष्टके ।
या चेतना द्वादशधा कर्म कृष्णक्षयाय तत् ॥ ६१ ॥
नवमे चेतना या सा कृष्णशुक्लक्षयाय च ।
शुक्लस्य ध्यानवैराग्येष्वानन्तर्यमार्गजा ॥ ६२ ॥

अन्ये नरकवेद्यान्यकामवेद्यं द्वयं विदुः ।
दृग्घेयं कृष्णमन्येऽन्यत् कृष्णशुक्लं तु कामजम् ॥ ६३ ॥
अशैक्षं कायवाक्कर्म मनश्चैव यथाक्रमम् ।
मौनत्रयं त्रिधा शौचं सर्वं सुचरितत्रयम् ॥ ६४ ॥

अशुभं कायकर्मादि मतं दुश्चरितं त्रयम् ।
अकर्मापि त्वभिध्यादि मनोदुश्चरितं त्रिधा ॥ ६५ ॥
विपर्ययात् सुचरितं तदौदारिकसंग्रहात् ।
दश कर्मपथा उक्ता यथायोगं शुभाशुभाः ॥ ६६ ॥

अशुभाः षडविज्ञप्तिर्द्विधैकस्तेऽपि कुर्वतः ।
द्विविधाः सप्त कुशला अविज्ञप्तिः समाधिजाः ॥ ६७ ॥
सामन्तकास्तु विज्ञप्तिरविज्ञप्तिर्भवेन्न वा ।
विपर्ययेण पृष्ठानि प्रयोगस्तु त्रिमूलजः ॥६८॥

तदनन्तरसम्भूतेरभिध्याद्यास्त्रिमूलजाः ।
कुशलाः सप्रयोगान्ता अलोभद्वेषमोहजाः ॥ ६९ ॥
वधव्यापादपारुष्यनिष्ठा द्वेषेण लोभतः ।
परस्त्रीगमनाभिध्यादत्तादानसमापनम् ॥ ७० ॥

मिथ्यादृष्टेस्तु मोहेन शेषाणां त्रिभिरिष्यते ।
सत्त्वभोगावधिष्ठानं नामरूपं च नाम च ॥ ७१ ॥
समं प्राक् च मृतस्यास्ति न मौलोऽन्याश्रयोदयात् ।
सेनादिष्वेककार्यत्वात् सर्वकर्तृवदन्विताः ॥ ७२ ॥

प्राणातिपातः संचिन्त्य परस्याभ्रान्तिमारणम् ।
अदत्तादानमन्यस्वस्वीक्रिया बलचौर्यतः ॥ ७३ ॥
अगम्यगमनं काममिथ्याचारश्चतुर्विधः ।
अन्यसंज्ञोदितं वाक्यमर्थाभिज्ञे मृषावचः ॥ ७४ ॥
चक्षुःश्रोत्रमनश्चित्तैरनुभूतं त्रिभिश्च यत् ।
तद् दृष्टश्रुतविज्ञातमतं चोक्तं यथाक्रमम् ॥ ७५ ॥

पैशुन्यं क्लिष्टचित्तस्य वचनं परभेदने ।
पारुष्यमप्रियं सर्वं क्लिष्टं भिन्नप्रलापिता ॥ ७६ ॥
अतोऽन्यत् क्लिष्टमित्यन्ये लपनागीतनाट्यवत् ।
कुशास्त्रवच्चाभिध्या तु परस्वविषमस्पृहा ॥ ७७ ॥
व्यापादः सत्त्वविद्वेषो नास्तिदृष्टिः शुभाशुभे ।
मिथ्यादृष्टिस्त्रयो ह्यत्र पन्थानः सप्त कर्म च ॥ ७८ ॥

मूलच्छेदस्त्वसद्दृष्ट्या कामाप्तोत्पत्तिलाभिनाम् ।
फलहेत्वपवादिन्या सर्वथा क्रमशो नृषु ॥ ७९ ॥
छिनत्ति स्त्री पुमान् दृष्टिचरितः सोऽसमन्वयः ।
सन्धिः कांक्षास्तिदृष्टिभ्यां नेहानन्तर्यकारिणः ॥ ८० ॥
युगपद् यावदष्टभिरशुभैः सह वर्तते ।
चेतना दशभिर्यावच्छुभैर्नैकाष्टपञ्चभिः ॥ ८१ ॥
सम्भिन्नालाप-पारुष्यव्यापादा नरके द्विधा ।
समन्वागमतोऽभिध्यामिथ्यादृष्टी कुरौ त्रयः ॥ ८२ ॥
सप्तमः स्वयमप्यत्र कामेऽन्यत्र दशाशुभाः ।
शुभास्त्रयस्तु सर्वत्र सम्मुखीभावलाभतः ॥ ८३ ॥
आरूप्यासंज्ञिसत्त्वेषु लाभतः सप्त शेपिते ।
सम्मुखीभावतश्चापि हित्वा सनरकान् कुरून् ॥ ८४ ॥
सर्वेऽधिपतिनिष्यन्दविपाकफलदा मताः ।
दुःखनान्मारणादोजोनाशनात् त्रिविधं फलम् ॥ ८५ ॥
लोभजं कायवाक्कर्म मिथ्याजीवः पृथक् कृतः ।
दुःशोधत्वात् परिष्कारलोभोत्थं चेन्न सूत्रतः ॥ ८६ ॥
प्रहाणमार्गे समले सफलं कर्म पञ्चभिः ।
चतुर्भिरमलेऽन्यच्च सास्रवं यच्छुभाशुभम् ॥ ८७ ॥
अनास्रवं पुनः शेषं त्रिभिरव्याकृतं च यत् ।
चत्वारि द्वे तथा त्रीणि कुशलस्य शुभादयः ॥ ८८ ॥
अशुभस्य शुभाद्या द्वे त्रीणि चत्वार्यनुक्रमम् ।
अव्याकृतस्य द्वे त्रीणि त्रीणि चैते शुभादयः ॥ ८९ ॥
सर्वेऽतीतस्य चत्वारि मध्यमस्याप्यनागताः ।
मध्यमा द्वे अजातस्य फलानि त्रीण्यनागताः ॥ ९० ॥
स्वभूमिकस्य चत्वारि त्रीणि द्वे वान्यभूमिकाः ।
शैक्षस्य त्रीणि शैक्षाद्या अशैक्षस्य तु कर्मणः ॥ ९१ ॥
धर्माः शैक्षादिका एकं फलं त्रीण्यपि च द्वयम् ।
ताभ्यामन्यस्य शैक्षाद्या द्वे द्वे पञ्च फलानि च ॥ ९२ ॥
त्रीणि चत्वारि चैकं दृग्घेयस्य तदादयः ।
ते द्वे चत्वार्यथ त्रीणि भावनाहेयकर्मणः ॥ ९३ ॥
अप्रहेयस्य ते त्वेकं द्वे चत्वारि यथाक्रमम् ।
अयोगविहितं क्लिष्टं विधिभ्रष्टं च केचन ॥ ९४ ॥
एकं जन्माक्षिपत्येकमनेकं परिपूरकम् ।
नाक्षेपिके समापत्ती अचित्ते प्राप्तयो न च ॥ ९५ ॥

आनन्तर्याणि कर्माणि तीव्रक्लेशोऽथ दुर्गतिः ।
कौरवासंज्ञिसत्त्वाश्च मतमावरणत्रयम् ॥ ९६ ॥
त्रिषु द्वीपेष्वानन्तर्यं षण्ढादीनां तु नेष्यते ।
अल्पोपकारालज्जित्वाच्छेषे गतिषु पञ्चसु ॥ ९७ ॥
सङ्घभेदस्त्वसामग्री स्वभावो विप्रयुक्तकः ।
अक्लिष्टाव्याकृतो धर्मः सङ्घस्तेन समन्वितः ॥ ९८ ॥
तदवद्यमृषावादस्तेन भेत्ता समन्वितः ।
अवीचौ पच्यते कल्पमधिकैरधिका रुजः ॥ ९९ ॥
भिक्षुर्दृक्चरितो वृत्ती भिनत्त्यन्यत्र बलिशान् ।
शास्तृमार्गान्तरक्षान्तौ भिन्नो न विवसत्यसौ ॥ १०० ॥
चक्रभेदः स च मतो जम्बूद्वीपे नवादिभिः ।
कर्मभेदस्त्रिषु द्वीपेष्वष्टाभिरधिकैश्च सः ॥ १०१ ॥
आदावन्तेऽर्बुदात् पूर्वं युगाच्चोपरते मुनौ ।
सीमायां चाप्यबद्धायां चक्रभेदो न जायते ॥ १०२ ॥
उपकारिगुणक्षेत्रनिराकृतिविपादनात् ।
व्यञ्जनान्तरितेऽपि स्यान्माता यच्छोणितोद्भवः ॥ १०३ ॥
बुद्धे न ताडनेच्छस्य प्रहारान्नोर्ध्वमर्हति ।
नानन्तर्यप्रयुक्तस्य वैराग्यफलसम्भवः ॥ १०४ ॥
संघभेदे मृषावादो महावद्यतमो मतः ।
भवाग्रचेतना लोके महाफलतमा शुभे ॥ १०५ ॥
दूषणं मातुरर्हन्त्या नियतिस्थस्य मारणम् ।
बोधिसत्त्वस्य शैक्षस्य संघायद्वारहारिका ॥ १०६ ॥
आनन्तर्यसभागानि पञ्चम स्तूपभेदनम् ।
क्षान्त्यनागामितार्हत्त्वप्राप्तौ कर्मातिविघ्नकृत् ॥ १०७ ॥
बोधिसत्त्वः कुतो यावद् यतो लक्षणकर्मकृत् ।
सुगतिः कुलजोऽव्यक्षः पुमान् जातिस्मरोऽनिवृत् ॥ १०८ ॥
जम्बूद्वीपे पुमानेव सम्मुखं बुद्धचेतनः ।
चिन्तामयं कल्पशते शेष आक्षिपते हि तत् ॥ १०९ ॥
एकैकं पुण्यधानजमसंख्येयत्रयान्तजाः ।
विपश्यी दीपकृद् रत्नशिखी शाक्यमुनिः पुरा ॥ ११० ॥
सर्वत्र सर्वं ददतः कारुण्याद् दानपूरणम् ।
अङ्गच्छेदेऽप्यकोपात् तु रागिण क्षान्तिशीलयोः ॥ ११

तिष्यस्तोत्रेण वीर्यस्य धीसमाध्योरनन्तरम् ।
पुण्यं क्रियाथ तद्वस्तु त्रयं कर्मपथा यथा ॥ ११२ ॥
दीयते येन तद्दानं पूजानुग्रहकामया ।
कायवाक्कर्म सोत्थानं महाभोग्यफलं च तत् ॥ ११३ ॥
स्वपरार्थोभयार्थाय नोभयार्थाय दीयते ।
तद्विशेषः पुनर्दातृवस्तुक्षेत्रविशेषतः ॥ ११४ ॥
दाता विशिष्टः श्रद्धाद्यैः सत्कृत्यादि ददात्यतः ।
सत्कारोदाररुचिता कालानाच्छेद्यलाभिता ॥ ११५ ॥
वर्णादिसम्पदा वस्तु सुरूपत्वं यशस्वि वा ।
प्रियता सुकुमारर्तुसुखस्पर्शाङ्गिता ततः ॥ ११६ ॥
गतिदुःखोपकारित्वगुणैः क्षेत्रं विशिष्यते ।
अग्रं मुक्तस्य मुक्ताय बोधिसत्त्वस्य चाष्टमम् ॥ ११७ ॥
मातापितृग्लानधार्मकथिकेभ्योऽन्त्यजन्मने ।
बोधिसत्त्वाय चामेया अनार्येभ्योऽपि दक्षिणाः ॥ ११८ ॥
पृष्ठं क्षेत्रमधिष्ठानं प्रयोगश्चेतनाशयः ।
एषां मृद्वधिमात्रत्वात् कर्ममृद्वधिमात्रता ॥ ११९ ॥
सञ्चेतनसमाप्तिभ्यां निष्कौकृत्यविपक्षतः ।
परिवाराद् विपाकाच्च कर्मोपचितमुच्यते ॥ १२० ॥
चैत्ये त्यागान्वयं पुण्यं मैत्र्यादिवदगृह्णति ।
कुक्षेत्रेऽपीष्टफलता फलबीजविपर्ययात् ॥ १२१ ॥
दौःशील्यमशुभं रूपं शीलं तद्विरतिर्द्विधा ।
प्रतिक्षिप्ताच्च बुद्धेन विशुद्धं तु चतुर्गुणम् ॥ १२२ ॥
दौःशील्यतद्धेत्वहतं तद्विपक्षसमाश्रितम् ।
समाहितं तु कुशलं भावना चित्तवासनात् ॥ १२३ ॥
स्वर्गाय शीलं प्राधान्याद् विसंयोगाय भावना ।
चतुर्णां ब्राह्मपुण्यत्वं कल्पं स्वर्गेषु मोदनात् ॥ १२४ ॥
धर्मदानं यथाभूतं सूत्राद्यक्लिष्टदेशना ।
पुण्यनिर्वाणनिर्वेधभागीयं कुशलं त्रिधा ॥ १२५ ॥
योगप्रवर्तितं कर्म ससमुत्थापकं त्रिधा ।
लिपिमुद्रे सगणनं काव्यं संख्या यथाक्रमम् ॥ १२६ ॥
सावद्या निवृता हीनाः क्लिष्टा धर्माः शुभामलाः ।
प्रणीताः संस्कृतशुभाः सेव्या मोक्षस्त्वनुत्तरः ॥ १२७ ॥